मन्त्रराजजपश्चैव चक्रराजार्चनं तथा।
रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ॥ ३१० ॥

अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम्।
स चक्षुषा विना रूपं पश्येदेव विमूढधीः ॥ ३११ ॥

रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः।
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ॥ ३१२ ॥

यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम्।
नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ॥ ३१३ ॥

तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत्।
इति ते कथितं स्तोत्रं रहस्यं कुम्भसंभव ॥ ३१४ ॥

नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन।
यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ॥ ३१५ ॥

पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम्।
यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ॥ ३१६ ॥

तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः।
रहस्यनामसाहस्रं तस्मात्संगोपयेदिदम् ॥ ३१७ ॥

---

त्रयाणामेकत्र मेलनमतीव दुर्लभमिति न्यायसिद्धमेवार्थमाह—**मन्त्रेति**। अपितु निरवधिकस्येति शेषः। नकारेणैवायं समासो नाल्पस्येति नतु नञ् ॥ ३१० ॥ एवं देवताप्रीतिकरत्वं सर्वकामपूरकत्वं चास्यान्वयमुखेनोक्त्वा व्यतिरेकमुखेन निदर्शनालंकाराभ्यां द्रढयति—**अपठन्निति** द्वाभ्याम्। स्पष्टोऽर्थः ॥ ३११ ॥ ३१२ ॥ भक्ततावच्छेदकमप्येतदेवेत्यन्वयव्यतिरेकाभ्यामाह—**य इति**। यो नित्यं संकीर्तयेत्स एव भक्तो नान्य इत्यर्थः। 'ये यजमानास्त ऋत्विज' इत्यत्रेव यत्तदोर्वैपरीत्येनान्वयः ॥ ३१३ ॥ नामसाहस्रपाठविधिं निगमयंस्तत्फलकथनमुपसंहरति—**तस्मादिति**। प्रयतः शुचिः ॥ ३१४ ॥ उत्तरत्र संप्रदायप्रवर्तनप्रकारं शिक्षयति—**नेति**। भक्तायापि विद्यावेदनरहिताय तत्सहितायाप्यभक्ताय न ब्रूयात्। तथा गोप्यं श्रीविद्या यथा तदभाववते न प्रदर्श्यते तथेदं तद्वतेपि न प्रदर्श्यं किमुत तदभाववत इति भावः ॥ ३१५ ॥ अतएव निषेधत्यर्धेन—**पश्विति**। पशवश्च द्विविधाः पूर्वमुक्ताः ॥ * ॥ निषेधोल्लङ्घने दण्डमाह—**य इति**। यश्च गृह्णातीति चकारलभ्योऽर्थः ॥ ३१६ ॥ तस्मै दात्रे विद्यारहिताय ग्रहीत्रे च। 'क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोप' इति संप्रदानसंज्ञा ॥ * ॥ गोपनीयतामुपसंहरत्यर्धेन—**रहस्येति**। रहस्येत्यादिविशेष्यं हेतुगर्भम्। तेन परिकराङ्कुरालंकारः। तस्मात् अनधिकारिणोर्दातृग्रहीत्रोरनर्थप्रदत्वात्

स्वतन्त्रेण मया नोक्तं तवापि कलशोद्भव ।
ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ॥ ३१८ ॥
कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् ।
तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ॥ ३१९ ॥

सूत उवाच ।

इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ।
आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ॥ ३२० ॥

इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे ललितासहस्रनाम-स्तोत्रं नाम षट्त्रिंशोऽध्यायः ॥

---

रहस्यत्वाच्च गोपयेदित्यर्थः ॥ ३१७ ॥ ननु यद्विद्यावतेऽपि गोप्यं तन्मह्यं त्वया कथं प्रदर्शितमित्याशङ्कमानमगस्त्यं समाधत्ते हयग्रीवः—स्वतन्त्रेणेति । स्वतन्त्रेण पराप्रेरितेन । कलशीति जातिलक्षणो ङीष् । तत्प्रयोगश्च श्लेषेण देवीपुत्रबोधनाय । तदप्युपास्तिबलेन देवीपुत्रभावपर्यन्तां पदवीमुपारूढे वात्सल्येन ललिताम्बाप्रेरणावश्यंभावध्वननाय । 'कलं शुके कलौ जीर्णे कलो नादेऽतिमञ्जुल' इति यादवबलात्कले शुके नादे वा शेत इति कलशी देवी । सर्वोत्तमत्वाद्वा । 'सर्वोत्तमे चोत्तमाङ्गे कुम्भे च कलशध्वनि'रिति रभसः । ललिताप्रेरणादेव तत्प्रवर्तनाया अनुल्लङ्घनीयत्वात् । अधिकारिविषय एव तत्प्रेरणस्य जायमानत्वाच्च । तेनोपासकाभासायैव न प्रदर्श्यमिति भावः ॥ ३१८ ॥ त्वं तु नोपासकाभासः अपितु पूर्णोऽधिकारीति ध्वननाय प्रवर्तयति । त्वयेति शेषः । निरन्तरं अभेदानुसंधानपूर्वकम् । नचात्र नामकीर्तनविधिरसकृच्छ्रूयमाणोऽभ्यासात्कर्माणि भिन्द्यादेवेत्येकस्यैवैतावन्ति फलानीति वर्णनमयुक्तमिति वाच्यम् । भावनाभेदमात्रेणापि तदुपपत्तेः फलस्यानुपादेयत्वेन तद्विशेषोद्देशेन कर्मण एव पुनःपुनर्विधानेऽप्यन्यपरत्वेन तादृशस्य पुनःश्रवणस्याभ्यासरूपत्वाभावात् । 'अपः प्रणयती'ति विधेरर्थवादवैचित्र्यार्थं षड्वारं श्रवणेऽपि कर्मभेदानङ्गीकारात् । अनुपादेयगुणसान्निध्येऽप्यसंनिधेरभावेन प्रकरणान्तरस्यापि शङ्कितुमयोगाच्चेति दिक् ॥ ३१९ ॥ प्रहृष्टो वचनं प्राहेत्यादिनोपक्रान्तमेकेन श्लोकेनोपसंहरति भगवान्सूतः । आनन्दे स्वात्मानन्दे मग्नं विषयान्तरसंचाररहित्येन तदेकप्रवणं हृदयं चित्तं यस्य सः । पुलका आनन्दजन्यरोमाञ्चा अस्य संजाता इति पुलकितः । तारकादित्वादितच् ॥ ३२० ॥

अथ परिभाषायां स्वग्रन्थमुपसंहरति—इति परिभाषामण्डलमुदितं नरसिंह्यज्वना विदुषा । सत्संप्रदायगमकं शिवभक्तानन्दनाय शिवम् ॥४०॥ मण्डलशब्दश्चत्वारिंशत्संख्यात्मकसमूहपरः । विदुषा विद्याष्टादशकविदा श्रीविद्योपासकेन च । शिवयोर्भक्तानां सत्संप्रदायं दुर्लभतरमन्वेषमाणानामानन्दनाय । शिवं मङ्ग-

लरूपमिति सर्वं शिवम् ॥ ४० ॥

इति भास्कररायेण कृते सौभाग्यभास्करे । जाता फलश्रुतिः श्लोकैः क्षमाह्व द्वादशी कला ॥ १२ ॥

## ग्रन्थकृत्प्रशस्तिः ।

श्रीविश्वामित्रवंश्यः शिवभजनपरो भारतीसोमपीथी
काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।
मोदच्छायामितायां शरदि शरदतावाश्विने कालयुक्ते
शुक्ले सौम्ये नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥ १ ॥

श्रुतिस्मृतिन्यायपुराणसूत्रकोशागमश्रीगुरुसंप्रदायात् ।
निश्चित्य निर्मथ्य कृतापि टीका शोध्यैव सद्भिर्मयि हार्दवद्भिः ॥ २ ॥

प्रमादो मेऽवश्यं भवति मतिमान्द्यादलसतः
पदार्थन्यायानामपि दुरवगाहत्वनियमान् ।
परं त्वन्तः सन्तः सदयहृदया नाममहिमा-
प्यपूर्वैस्तस्मान्मे न खलु खलपापोभयभयम् ॥ ३ ॥

अम्ब त्वत्पदयोः समर्पितमिदं भाष्यं त्वया कारितं
त्वन्नामार्थविकासकं तव मुदे भूयादथ त्वां भजन् ।
यो नैनत्परिशीलयेन्न च पठेद्यः पुस्तकस्यापि वा
संग्राहं न करोति तस्य ललिते माभूद्भवत्यां मतिः ॥ ४ ॥

नामैकं मामनयन्नामसहस्राम्बुधेः परं पारम् ।
जलबिन्दुर्भवजलधेर्येषां ते मे जयन्ति गुरुचरणाः ॥ ५ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्र श्रीमद्गम्भीरराय-
दीक्षितसूरिसूनुना भासुरेत्युपाख्येन भास्कररायेण भासुरानन्दनाथेतिदी-
क्षानामशालिना प्रणीतं सौभाग्यभास्कराख्यं ब्रह्माण्डपुराणीयश्री-
ललितारहस्यनामसहस्रभाष्यं संपूर्णम् ।

सम्पूर्णोऽयं ग्रन्थः ।



